**भौमफलम्**

होराश्रितो वासरपस्य भौमो बन्धुप्रियं साहसकर्मशीलम् ।
नरं प्रसूते बहुरोगयुक्तं पित्ताश्रितं तप्ततनुं नितान्तम् ॥ ३३ ॥

**बुधफलम्**

होरां बुधो वासरपस्य जातस्तीव्रं शठं कामपरं विशीलम् ।
गतप्रतापं बहु पापरक्तं देवद्विजानां परिनिन्दकञ्च ॥ ३४ ॥

**बृहस्पतिफलम्**

होरां रवेर्देवगुरुः प्रयातः, करोति मर्त्यं बहुरोषयुक्तम् ।
लुब्धं स्ववाग्दोषयुतं सुतीव्रं सुगुप्तपापं परतर्ककं च ॥ ३५ ॥

**शुक्रफलम्**

होरां गतो वासरपस्य शुक्रः करोति मूर्खं विधनं विशीलम् ।
हिंसानृतस्तेयपरं प्रकामं पैशुन्ययुक्तं च विधर्मशीलम् ॥ ३६ ॥

**शनिफलम्**

होरां गतो वासरपस्य शौरिर्नरं प्रसूते वहुवैरियुक्तम् ।
प्रनष्टधर्मं विगताभिमानं दयाविहीनं परदारलुब्धम् ॥ ३७ ॥

## अथ चन्द्रहोरायां ग्रहाणां फलानि

**तत्रादौ चन्द्रहोरायां सूर्यफलम्**

होरां गतो रात्रिपतेर्दिनेशो नरो विधत्ते सततं सुशीलम् ।
रोगैर्विमुक्तं विगतारिपक्षं प्रयाति बन्धुस्वजनैः प्रधानम् ॥ ३८ ॥

**चन्द्रहोरायां चन्द्रफलम्**

होरां गतो रात्रिपतिर्यदा स्वां तदा नरं शीलरतं करोति ।
स्वधर्मरक्तं नृपमानयुक्तं कृतज्ञमुत्साहितमप्रमत्तम् ॥ ३९ ॥

**भौमफलम्**

होराश्रितो रात्रिपतेर्महीजः करोति मर्त्यं विनयेन युक्तम् ।
भोक्तारमाढ्यं व्यवहारशीलं गतप्रसूतिं विगतारिपक्षम् ॥ ४० ॥

## बुधफलम्

होरां गतो रात्रिपतेस्तु सौम्यो नरं प्रसूते सुभगं सुशीलम् ।
वसिष्ठवाग्बुद्धिगुणं नयज्ञं प्रियातिथिं नित्यमुदारचेष्टम् ॥ ४१ ॥

## बृहस्पतिफलम्

चन्द्रस्य होराधिगतः सुरेज्यो नरं प्रसूते सुभगं मनोज्ञम् ।
स्थिरक्रियारम्भधनं शरण्यं धर्मस्वभावं दृढसौहृदं च ॥ ४२ ॥

## शुक्रफलम्

होरां गतो रात्रिपतेस्तु शुक्रः सतां प्रियं स्फीतिधनं करोति ।
गन्धर्वलीलाश्रुतिगीतरक्तं विप्रप्रियं पार्थिववल्लभं च ॥ ४३ ॥

## शनिफलम्

होरां गतो रात्रिपतेस्तु शौरिर्नरं प्रसूते बहुकीर्तियुक्तम् ।
सौन्दर्यसौख्यार्थसमृद्धिवन्तं प्रियं मनोज्ञं प्रणतं सुराणाम् ॥ ४४ ॥

**इति होरायां ग्रहाणां फलानि ।**

## अथ विशेषः

होरायां रूपसौहार्दं पश्येज्जन्मनि सर्वदा ।
बहवो धनगाः श्रेष्ठास्तथा नेष्टा व्यये ग्रहाः ॥ ४५ ॥
होरेशश्चेत्सासद्ग्रहः सवक्रस्तदादृग्वक्रम् ।
वक्रंतथार्कविध्वोः सेन्द्रसतोर्विक्रतरदनरसनोष्ठम् ॥ ४६ ॥

## होराफले श्रीवराहः

यातेष्वसत्स्वसमभेषु दिनेशहोरां
ख्यातोमहोद्यमवलार्थयुतोतितेजाः ।
चान्द्री शुभेषु युजिमार्दवकान्तिसौख्य-
सौभाग्यधीमधुरवाक्ययुतः प्रजातः ॥ ४७ ॥

तास्वेव होरास्वपरर्क्षगासु ज्ञेया नराः पूर्वगुणेषु मध्याः ।
व्यत्यस्तहोरा भवनस्थितेषु मर्त्या भवन्त्युक्तगुणैर्विहीनाः ॥ ४८ ॥

# अथ द्रेष्काणफलम्

## तत्रादौ लग्नगतद्रेष्काण फलानि

द्रेष्काणे दिवसेश्वरस्य मलिनः शूरोऽङ्गनावल्लभः
क्रूरः साहसिकः कुकर्मकुशलो मूर्खः कुपक्षग्रहः।
ह्वाशी गुरुतल्पगोऽल्पतनयो द्यूतक्रियासंरतः
पापात्मा कृपणः खलोऽतिमुखरः सः स्याददृश्यो नरः॥ १॥

**अन्यच्च**

त्र्यंशो यदा वासरपस्य लग्ने तदा सुतीव्रं जनयेन्मनुष्यम्।
कलिप्रियं दानरतं विशालं विद्वेषशीलं द्विजदेवतानाम्॥ २॥

द्रेष्काणे रजनीकरस्य सुतनुः सम्पूर्णचन्द्राननः
शिल्पज्ञो वहुभाषणो विधुरपूर्णश्चेत्कदापि क्षयी।
शास्त्रे मन्दरतिः सुशीलहृदयो वन्ध्वर्चितश्चंचलो,
धर्माधर्मरतो विदेशकुशलो स स्याददृश्यो नरः॥ ३॥

**अन्यच्च**

चन्द्रस्य लग्ने तु यदा त्रिभागस्तदा प्रसूते खलु भाग्यवन्तम्।
श्रियान्वितं भक्तिपरं गुरूणां विख्यातकीर्तिः सुतमित्रयुक्तम्॥ ४॥

द्रेष्काणे धरणीसुतस्य मलिनः क्रूरो विहीनो धनैः
पापात्मा पिशुनः सुतार्थरहितः स्यान्निष्ठुरो निर्दयः।
दुःशीलो बहुभाषणो क्षततनुश्चात्मंभरिः क्रोधयुक्
रोगार्तो परसेवको गुणगणः सन्त्याजितो मानवः॥ ५॥

**अन्यच्च**

त्र्यशांशको भूमीपतेस्तु लग्ने करोति मर्त्यं क्षतजार्तिदेहम्।
क्रूरस्वभावं हतबन्धुदारं प्रतापहीनं विषयार्दितं च॥ ६॥

द्रेष्काणे शशिजस्य बुद्धिकुशलः क्ष्मापालपूज्यः सदा।
दीर्घायुर्वलवानपत्यवहुलः शांतो यशस्वी शुचिः।
धर्मज्ञानरतः प्रमादरहितो नित्यं सतां वल्लभः।
शास्त्रज्ञः कुलभूषणो वहुधनत्यागी च तुष्टो नरः॥ ७॥

**अन्यच्च**

तृतीयभागः शशिजस्य लग्ने करोति सौम्यं सरुजं मनुष्यम् ।
न दीर्घसूत्रं न च वित्तहीनं सस्यादिकं भूरिधनं सदैव ॥ ८ ॥
द्रेष्काणे धिषणस्य यः शिशुरभूत् दीर्घायुरव्याधितो ।
बुद्धीशः प्रियदर्शनो गुणनिधिर्मुक्ताशयोर्धार्मिकः ।
मोक्षज्ञानपरः कृपालयतनुः शान्तः सुशीलः शुचिः ।
सुस्त्रीस्नेहरतोऽन्यदारनिरतः स्यात्सुन्दरः श्रीमयः ॥ ९ ॥

**अन्यच्च**

त्र्यंशो यदा देवपुरोहितस्य लग्ने प्रयातः प्रकरोति मर्त्यम् ।
तेजस्विनं सर्वसुखाधिवासं सुधार्मिकं प्रीतिकरं स्वपक्षे ॥ १० ॥
द्रेष्काणे भृगुनन्दनस्य सुतनु पात्रं धरित्रीपतेः ।
सर्वज्ञोऽपि जनानुरागकुशलो दाता सतां पालकः ।
मुक्तारत्नवराङ्गनात्मजघनैः स्फीतः कृपालुः शुचिः ।
शान्तः सत्यरतोऽपि मुक्तहृदयो धर्मानुरक्तो नरः ॥ ११ ॥

**अन्यच्च**

द्रेष्काणसंस्थश्च भृगोर्विलग्ने वित्तान्वितं संजनयेन्मनुष्यम् ।
शास्त्रानुरक्तं गतरोगपापं नृपप्रियं देवगुरुप्रसक्तम् ॥ १२ ॥
द्रेष्काणे रविनन्दनस्य मलिनः क्रूरो मृदुस्तस्करो ।
दुःशीलः कृपणः सुतार्थरहितः प्रेष्यैर्गुणैर्वर्जितः ।
पापात्मा गुरुतल्पगोऽपि पिशुनः स्यात् क्रोधनो निर्दयः ।
शोकार्तो मुखरः स्वरूपरहितः कामातुरो मानवः ॥ १३ ॥

**अन्यच्च**

शनैश्चरश्चापि त्रिभागसंस्थो लग्नस्य सूते कृपणं गतस्वम् ।
धर्मार्थहीनं सहजं न सौख्यं दयाविहीनं च करोति नूनम् ॥ १४ ॥

**इति लग्नगतद्रेष्काणफलम् ॥**

## अथ पृथक् द्रेष्काणफलानि

**तत्रादौ मेषस्य**

दाता हर्ता दीप्तः क्षयोदयी सङ्गरप्रचण्डः स्यात् ।
प्रियविग्रहस्त्रिभागे मेषाग्रे बन्धुषूग्रदण्डश्च ॥ १५ ॥

स्त्रीचञ्चलो विहारी रतिमान् गीतप्रियो मनस्वी स्यात् ।
मित्रार्थभाक् सुरूपः स्त्रीवित्तरुचि द्वितीये च ॥ १६ ॥

गुणवान् परदोषकरो बलसत्त्वयुतो नरेन्द्रसेवी स्यात् ।
स्वजनप्रियोऽतिधर्मस्तृतीयभागे प्रियादरोऽज्ञश्च ॥ १७ ॥

**वृषस्य**

प्रियपानभोज्यनारीवियोगतप्तो वृषस्य पूर्वांशे ।
वस्त्राऽलंकारयुतो युवतिप्रकृतानुसारी स्यात् ॥ १८ ॥

सौम्यवपुस्त्रीसुभगो महाधरो रूपधनयुक्तः ।
धनवान् स्थिरो मनस्वी लुब्धस्त्रीणां प्रियो द्वितीये स्यात् ॥ १९ ॥

चतुरोऽल्पभाग्यवीरो मलीमसः स्याद्धनान्युपादाय ।
सन्तप्य ते तु पश्चाद्वृषभस्य भागे तृतीये च ॥ २० ॥

**मिथुनस्य**

मिथुनादिमे दृगाणे पृथूत्तमाङ्गो धनान्वितः प्रांशुः ।
कितवो गुणी विलासी नृपाप्तमानो वचस्वी स्यात् ॥ २१ ॥

ह्रस्वाननस्वरूपः सौम्यवपुः सूक्ष्ममूर्द्धजतनुः स्यात् ।
धन्यो मृदुर्महाधीर्द्वितीयभागे प्रतापवान् सुयशाः ॥ २२ ॥

स्त्रीद्वेषिणो वपुष्मान् महाशिराः शत्रुसंयुतः प्रांशुः ।
रूक्षनखाङ्घ्री करतलश्चलार्धविभृतो दृढस्तृतीये स्यात् ॥ २३ ॥

**कर्कस्य**

कर्कटकादिमभागे देवब्राह्मणरतश्चलागौरः ।
कृत्यकरश्च परेषां सुधीः सुमूर्तिः शुभाङ्गनः शुभगः ॥ २४ ॥

लुब्धस्याद्वदनपरः स्वप्नरतः स्त्रीजितोऽभिमानी स्यात् ।
सहजान्वितो विलासी चपलो बहुरुग् द्वितीये च ॥ २५ ॥

स्त्रीचञ्चलोऽर्थभागी विदेशनिरतः प्रियासवः साधुः ।
काननतोयानुरतो दुर्दृष्टिर्माल्यवांस्तृतीये स्यात् ॥ २६ ॥

**सिंहस्य**

सिंहादिद्रेष्काणे दाता भर्तारिर्निर्जिगीषुः स्यात् ।
बहुधनयोषित्सु सुहृद्बहुनृपसेवकः सुसत्वश्च ॥ २७ ॥

सुरुचिरकारी दाता स्थिरो वपुष्मान् रणेप्सुः स्यात् ।
सुखभाक् श्रुतिधर्मरुचिर्विस्तीर्णमतिर्द्वितीये च ॥ २८ ॥

लुब्धः परस्वहरणे कल्यः स्तब्धो महामतिः कितवः ।
नायततनुर्मूर्तिः स्यान्नैकापत्यः प्रगल्भोऽन्त्ये ॥ २९ ॥

**कन्यायाः**

श्यामः सुवाग्विनीतः प्रांशुः सुकुमारमूर्तिरबलाद्ये ।
स्त्रीभ्योऽर्थभागनिष्ठो दीर्घशिरा मधुसमाक्षश्च ॥ ३० ॥

धीरो विदेशभागी शिल्पकथापण्डितः समरशौण्डः ।
वाचाटः श्रुतवाक्यो वनौकसां सम्मतो द्वितीये स्यात् ॥ ३१ ॥

गीतापरार्द्धभागी सङ्गीतरतिर्नरेन्द्रदयितः स्यात् ।
ह्रस्वस्वरूपवेषश्चान्ते पृथुदृक् शिरस्कश्च ॥ ३२ ॥

**तुलायाः**

कन्दर्परूपनिपुणस्तुलादिभागेऽध्वसेवज्ञः ।
श्यामकला पण्यरतो नियोगधीरः सुमेधावी ॥ ३३ ॥

पङ्कजविशालनेत्रः सुरूपवाक् साहसः विलासी स्यात् ।
ख्यातः स्ववंशवर्धितवृद्धानुचरो द्वितीये च ॥ ३४ ॥

चपलः शठः कृतघ्नो विरूपजिह्मोपचितमूर्तिः ।
नष्टसुहृद्द्रविणयशाः स्वल्पमतिर्भागके तृतीये स्यात् ॥ ३५ ॥

**वृश्चिकस्य**

गौरः स्थिरः प्रचण्डो रणोत्कटः स्यान्नरो विशालाक्षः ।
स्थूलविशालशरीरः कलिप्रियो वृश्चिकाद्यांशे ॥ ३६ ॥
मृष्टान्नपानचतुरश्चलेक्षणो हेमगौरमूर्तिः स्यात् ।
कान्तः परवित्तयुतः शीलकलावान् द्वितीयेंऽशे ॥ ३७ ॥
निश्मश्रुरोमहिंस्रः पिङ्गाक्षमहोदरः प्रहर्त्ता च ।
सहजच्युतस्तृतीये पीवरबाहुः सुधीरहृदयश्च ॥ ३८ ॥

**धनुषः**

परिमण्डलाक्षवक्त्रो गणेषु मुख्यो धनुर्दृगाणाद्ये ।
स्वोपचितस्वाचारस्तथा मृदुर्भवति सञ्ज्ञातः ॥ ३९ ॥

शास्त्रार्थवित् प्रवक्ता क्रतुशतहर्ता द्वितीये च।
मन्त्रभृतां श्रेष्ठतमस्त्वनेकतीर्थायतनचारी ॥ ४० ॥

बन्धुप्रधानचतुरः सतां गतिर्धर्मभाक् तृतीयेऽपि।
कामी पराङ्गनाभाक् रूपयशोभाजनो विजिष्णुश्च ॥ ४१ ॥

**मकरस्य**

व्यालम्बभुजः श्यामः प्रथितयशो रूपकान्तिशठः स्मितभाषी।
मकराद्ये स्त्रीषुजितो वल्गुचेष्टधनयुक्तः ॥ ४२ ॥

अल्पवदनश्च मध्ये चलः परस्त्रीधनापहर्ता स्यात्।
चतुरः सतां गतिज्ञः प्रदानशीलो दुरन्तपादः स्यात् ॥ ४३ ॥

वाचालः कलुषकृशो दीर्घाङ्गपितृवियुश्च।
लभते विदेशगमनाद्व्यसनानि मृगमुखस्यान्ते ॥ ४४ ॥

**कुम्भस्य**

स्त्रीमानयशोभूतिः स्फीतप्रभवो घटस्याद्ये।
प्रांशुः कर्मसु निष्ठो धनवान्नृपसेवको जातः ॥ ४५ ॥

लुब्धः समर्थमधुरो गौरः पिङ्गोद्धताक्षहास्यधनः।
उद्घृष्टवचा मतिमान् बहुमित्रः स्याद् द्वितीये तु ॥ ४६ ॥

दीर्घः शठः प्रतापी कृशोऽल्पबाहुः सुतार्थभाक् स्तब्धः।
बह्वनृतोऽन्तर्विषमो विदारिताक्षो रतिविन्दन्त्ये ॥ ४७ ॥

**मीनस्य**

मधुपिङ्गाक्षो गौरो मेधावी सत्क्रिया रतिज्ञश्च।
सुखभागी मीनाद्ये जलचरयुगले विनीतश्च ॥ ४८ ॥

नार्युपचारप्रवरो मृष्टान्नरतिः परार्द्धकामी।
स्त्रीसञ्जनातिदयितो वदतां श्रेष्ठो द्वितीये तु ॥ ४९ ॥

श्यामः कलासु निपुणः पृथुपादसुहृतप्रदानश्च।
मृष्टान्नपानहास्यो मीनयुगान्त्ये भवेत्पुरुषः ॥ ५० ॥

इतीरितोऽयं स्वगुणस्वभावैः, द्रेष्काणकानां गुण चिन्हकल्प्यः।
द्रेक्कापतौ वीर्यवतीष्टदृष्टे द्रेक्काफलं निर्विकलं विदध्यात् ॥ ५१ ॥

## अथ सर्वेषां ग्रहाणां द्रेष्काणे सूर्यफलमाह

### सूर्यस्य द्रेष्काणे सूर्यफलम्

रोगाभिभूतं सविता करोति नरं त्रिभागे प्रचुरं स्वकीये।
उद्विग्नचित्तं परदेशभाजं, जयत्प्रतापं प्रबलं नितान्तम् ॥ १ ॥

### चन्द्रस्य द्रेष्काणे सूर्यफलम्

त्र्यंशे विधोर्वासरपः प्रसूते धर्मिष्ठजंस्वं स्वजनं विपापम्।
गीतप्रियं सर्वधनं प्रयुक्तं, प्रभूतकोशं दयितं नराणाम् ॥ २ ॥

### भौमस्य द्रेक्काणे सूर्यफलम्

द्रेष्काणगोऽर्को धरणीसुतस्य यदा प्रजातः प्रकरोत्पथारीन्।
असृग्व्यथा नीचसमागमञ्च पुत्रार्थहानिं सततं नराणाम् ॥ ३ ॥

### बुधस्य द्रेक्काणे सूर्यफलम्

त्र्यंशे गतः सोमसुतस्य भानुः स्वधर्मशीलं प्रकरोति मर्त्यम्।
विलासिनीकामपरं सदैव विचित्रवाक्यं द्विजदेवभक्तम् ॥ ४ ॥

### गुरोर्द्रेक्काणे सूर्यफलम्

बृहस्पतेस्त्र्यंशमनु प्रयातो भानुर्विधत्ते मनुजं विनीतम्।
प्रियातिथिं सर्वगुणैः समेतं मेधान्वितं वाक्यविशारदञ्च ॥ ५ ॥

### शुक्रस्य द्रेक्काणे सूर्यफलम्

त्र्यंशस्थितो दैत्यपुरोहितस्य भानुर्विधत्ते सुखिनं मनुष्यम्।
स्त्रीवल्लभं देवगुरुप्रसक्तमरोगदेहं बहुसत्ययुक्तम् ॥ ६ ॥

### शनेर्द्रेक्काणे सूर्यफलम्

द्रेष्काणमर्कोपगतोऽर्कजस्य पापं प्रसूतेः सरुजं कृतघ्नम्।
नरं सुतास्रव्यसनोपतप्तं दुःशीलिनं बन्धुजनैर्विमुक्तम् ॥ ७ ॥

## अथ सर्वेषां ग्रहाणां द्रेष्काणे चन्द्रफलमाह

### सूर्यस्य द्रेष्काणे चन्द्रफलम्

त्र्यंशे शशी वासरपस्य नित्यं करोति पापं बहुशत्रुयुक्तम्।
अल्पार्थसत्वं विगुणं हृतस्वं, दौर्भाग्यदेहं परदारलुब्धम् ॥ ८ ॥

### चन्द्रस्य द्रेक्काणे चन्द्रफलम्

करोति विज्ञं बहुमित्रवित्तं पुत्रान्वितं बन्धुजनैः समेतम् ।
त्र्यंशे स्वकीये सुखिनं सुकान्तं निशाधिपो मर्त्यं मलाङ्किताङ्गम् ॥ ९ ॥

### भौमस्य द्रेक्काणे चन्द्रफलम्

त्र्यंशे शशाङ्को विचरन् कुजस्य नरं प्रसूते विगतप्रतापम ।
हीनक्रियं दुःखशतैरुपेतं परार्थलुब्धं गतसौहृदं च ॥ १० ॥

### बुधस्य द्रेक्काणे चन्द्रफलम्

द्रेष्काणमाप्तः प्रकरोति चन्द्रः सौम्यस्य सौम्यं सुभगं मनुष्यम् ।
विधाविनं सर्वगुणैः समेतं विद्यान्वितं सर्वकलासुदक्षम् ॥ ११ ॥

### गुरोर्द्रेक्काणे चन्द्रफलम्

त्र्यंशेगुरो रात्रिपतिः प्रसूते शास्त्रानुरक्तं मनुजं सुशीलम् ।
नानासुहृत्संस्तुतमल्पकोपं प्रियातिथिं देवगुरुप्रभक्तम् ॥ १२ ॥

### शुक्रस्य द्रेक्काणे चन्द्रफलम्

सितस्य चन्द्रो विचरन् त्रिभागे करोति मर्त्यं वरयानयुक्तम् ।
स्त्रीवल्लभं सत्यमुदारचेष्टं कलाधिपं पूज्यतमं नृपाणाम् ॥ १३ ॥

### शनेर्द्रेक्काणे चन्द्रफलम्

शनेर्यदा त्र्यंशमनुप्रयातश्चन्द्रस्तदा रोगिणमेव धत्ते ।
दीनं दरिद्रं विकृतं सपापं महापदं निष्ठुरमेव मर्त्यम् ॥ १४ ॥

### अथ द्रेष्काणे चन्द्रस्य फलविशेषः

कल्याणरूपगुणमात्मसुहृद् दृकाणे
चन्द्रोऽन्यगतस्तदधिनाथगुणं करोति ।
व्यालोद्यतायुधचतुश्चरणाण्डजेषु
तीक्ष्णोति हिंस्रगुरुतल्परतोऽटनश्च ॥ १५ ॥

## अथ सर्वेषां ग्रहाणां द्रेष्काणे भौमफलमाह

### सूर्यस्य द्रेष्काणे भौमफलम्

मुखाक्षिरोगोपहतं सुशीलं स्वल्पात्मजं क्लेशपरं खलं च ।
त्र्यंशे कुजो वासरपस्य तिष्ठन् करोति मर्त्यं विगतप्रतापम् ॥ १ ॥

### चन्द्रस्य द्रेक्काणे भौमफलम्

क्रूरं खलं द्वेषिणमिष्टधमं ख्यातं नृपाणां स्वगुणैरुदारैः।
त्र्यंशे गतो रात्रिपतेर्महीजो नरं प्रसूते विगतारिपक्षम् ॥ २ ॥

### भौमस्य द्रेक्काणे भौमफलम्

स्वत्र्यंशभागो विचरन् महीजो करोति मर्त्यं बहुरोगयुक्तम्।
परान्नरक्तं प्रवरप्रकोपं गतप्रतापं सततं कुशीलम् ॥ ३ ॥

### बुधस्य द्रेक्काणे भौमफलम्

त्र्यंशे कुजः सोमसुतस्य तिष्ठन् गम्भीरसत्वं स्थितिवृद्धिमन्तम्।
नरं प्रसूते बहुवित्तयुक्तं नरेन्द्र सन्मानसमन्वितञ्च ॥ ४ ॥

### गुरोर्द्रेक्काणे भौमफलम्

त्र्यंशे गुरोर्भूमिसुतः प्रसूते नरं विदग्धं प्रथितं कुवेषम्।
सुश्रूषकं देवगुरुद्विजानां प्रनम्रचित्तं मतिमन्तमेव ॥ ५ ॥

### शुक्रस्य द्रेक्काणे भौमफलम्

त्र्यंशे कुजा भार्गवनन्दनस्य नरं प्रसूते वनितास्वभिष्टम्।
हिरण्यवस्त्रमणिहस्तियुक्तं क्रियारुचाभिः प्रयतं प्रगल्भम् ॥ ६ ॥

### शनेर्द्रेक्काणे भौमफलम्

द्रेष्काणमार्के विचरन् महीजो, मूर्खं सदाचारगुणैर्विहीनम्।
प्रद्वेषशीलं प्रियविग्रहञ्च नरं प्रसूतेः सततं कुचैलम् ॥ ७ ॥

## अथसर्वेषांग्रहाणां द्रेष्काणे बुधफलमाह

### सूर्यस्य द्रेष्काणे बुधफलम्

त्र्यंशे बुधो वासरपस्य तिष्ठन् नरं प्रसूते परवादयुक्तम्।
क्रूरं हताशं सऋणं कुरूपं कूटानुरक्तं च सदासकामम् ॥ ८ ॥

### चन्द्रस्य द्रेक्काणे बुधफलम्

त्र्यंशे बुधो रात्रिपतेः प्रयातो नरं प्रसूते विगतारिपक्षम्।
शुश्रूषकं देवगुरुद्विजानां लिपिप्रवीणं कलहप्रियञ्च ॥ ९ ॥

### भौमस्य द्रेक्काणे बुधफलम्

बुधो यदा भूमिसुतस्य संस्थो, भागे तृतीये प्रकरोति मर्त्यम् ।
माङ्गल्यधर्मश्रुतिधर्मवाह्यं स्ववान्धवात्स्वल्पपदा विमुक्तम् ॥ १० ॥

### बुधस्य द्रेक्काणे बुधफलम्

स्ववह्निभागेन्दुसुतः प्रसूते सुरूपदेहं सुभगं मनुष्यम् ।
यज्ञव्रतादिष्यनुरक्तचेष्टं, दातारमार्यं बहुमित्रपक्षम् ॥ ११ ॥

### गुरोर्द्रेक्काणे बुधफलम्

तृतीयभागे सुरपूजितस्य बुधो विधत्ते प्रसभं मनुष्यम् ।
स्त्रीवल्लभं शुभ्रमलंघ्यवीर्य्यं प्रभूतकोशं विविधार्थयुक्तम् ॥ १२ ॥

### शुक्रस्य द्रेक्काणे बुधफलम्

भागे तृतीये शशिजः सितस्य तिष्ठन्प्रसूते सुविदग्धमेव ।
मर्त्यं महाधामनिधिं गतारिं प्रसन्नचित्तं नृपवल्लभञ्च ॥ १३ ॥

### शनेर्द्रेक्काणे बुधफलम्

त्र्यंशे शनेः सोमसुतः प्रयातः करोति नित्यं सऋणं मनुष्यम् ।
विवादिनं दुर्बलदेहसत्वं प्रवासिनं विग्रहविक्रमञ्च ॥ १४ ॥

## अथ सर्वेषां ग्रहाणां द्रेष्काणे गुरुफलमाह

### सूर्यस्य द्रेष्काणे गुरुफलम्

भागे तृतीये सुरराजमंत्री सूर्यस्यसूते कृपणं मनुष्यम् ।
क्रूरं क्रियाहीनमनःप्रधृष्यं निन्द्यं कुकर्मार्जितसम्पदञ्च ॥ १५ ॥

### चन्द्रस्य द्रेक्काणे गुरुफलम्

जीवस्त्रीभागे रजनीकरस्य तिष्ठन्प्रसूते सुमनोज्ञरूपम् ।
नरं प्रसिद्धं बहुमानवित्तं प्रगल्भचित्तं द्विजदेवभक्तम् ॥ १६ ॥

### भौमस्य द्रेक्काणे गुरुफलम्

त्र्यंशे गुरुर्भूमिसुतस्य धत्ते नृणां भयं वन्धुजनप्रसूतम् ।
पित्ताक्षिरोगं धनधान्यनाशं प्रभाषणं दस्युकृतं सदैव ॥ १७ ॥

### बुधस्य द्रेक्काणे गुरुफलम्

त्र्यंशे गुरुसोमसुतस्य तिष्ठन् करोति मर्त्यप्रवरं प्रसिद्धम् ।
विद्याविनीतं बहुधर्मसक्तं सौम्याकृतिं सोम्यगुणैः समेतम् ॥ १८ ॥

### गुरोर्द्रेक्काणे गुरुफलम्

त्र्यंशे स्वके देवगुरुः प्रसूते नरं सुशीलं विजितारिपक्षम् ।
क्षमान्वितं पार्थिवमानयुक्तं चतुष्पदाढ्यं प्रणतं गुरूणाम् ॥ १९ ॥

### शुक्रस्य द्रेक्काणे गुरुफलम्

द्रेष्काणसंस्थो भृगुजस्य जीवो नरं प्रसूते बहुकाञ्चनाढ्यम् ।
नागाश्वभाजं वररत्नयुक्तं सुखान्वितं पार्थिववल्लभञ्च ॥ २० ॥

### शनेर्द्रेक्काणे गुरुफलम्

रौद्रं परं स्वापहरं कुबुद्धिमनीष्टकर्माणममित्रवन्तम् ।
द्रेष्काणसंस्थो रविजस्य जीवो नरं प्रसूते बहुशोकभाजम् ॥ २१ ॥

## अथ सर्वेषां ग्रहाणां द्रेष्काणे शुक्रफलमाह

### सूर्यस्य द्रेष्काणे शुक्रफलम्

द्रेष्काणसंस्थो दिनपस्य शुक्रो नरं प्रसूते कठिनं गतस्वम् ।
कुयोषिताभ्यां गतसौख्ययुक्तं, क्षुद्रं नृशंसं बहुरोषिणञ्च ॥ २२ ॥

### चन्द्रस्य द्रेक्काणे शुक्रफलम्

तृतीयभागे शशिलाञ्छनस्य तिष्ठन् भृगुः सौख्ययुतं प्रसूते ।
विद्याविनीतं पितृमातृभक्तं तेजस्विनं धर्मपरं कृतज्ञम् ॥ २३ ॥

### भौमस्य द्रेक्काणे शुक्रफलम्

तृतीयभागे धरणीसुतस्य शुक्रश्चरन् पापरतं करोति ।
क्षुद्रोगवन्तं व्यसनैरुपेतं मायाविनं वञ्चनतत्परञ्च ॥ २४ ॥

### बुधस्य द्रेक्काणे शुक्रफलम्

द्रेष्काणसंस्थः शशिजस्य शुक्रो नरं प्रसूते सुभगं मनोज्ञम् ।
रतिप्रगल्भं प्रियधूर्तदारं सुवर्णरत्नात्मजभागिनं च ॥ २५ ॥

### गुरोर्द्रेक्काणे शुक्रफलम्

भागे तृतीये सुरपूजितस्य शुक्रश्चरन् श्रेष्ठतमं सुरूपम् ।
सत्यान्वितं सर्वकलासु दक्षं क्षमान्वितं प्रीतिकरं जनानाम् ॥ २६ ॥

### शुक्रस्य द्रेक्काणे शुक्रफलम्

त्र्यंशे स्वकीये भृगुजः प्रसूते नरं प्रगल्भं धनिनं सुशीलम् ।
अध्यात्मविद्यानिरतं सुरूपं कुलप्रधानं व्यसनैर्विहीनम् ॥ २७ ॥

### शनेर्द्रेक्काणे शुक्रफलम्

भागे तृतीये रविजस्य शुक्रः करोति मर्त्यं वधबन्धयुक्तम् ।
स्वबन्धुहीनं परदाररक्तं विद्वेषशीलं कुरतं कुसेव्यम् ॥ २८ ॥

## अथ सर्वेषां ग्रहाणां द्रेष्काणे शनेः फलमाह

### सूर्यस्य द्रेष्काणे शनिफलम्

द्रेष्काणसंस्थो दिनपस्य सौरः करोति कन्याप्रजनं मनुष्यम् ।
व्यायामभाजं विगतप्रतापं प्रसन्नशीलं सततं सुजिह्मम् ॥ २९ ॥

### चन्द्रस्य द्रेक्काणे शनिफलम्

भागे तृतीये रविजः प्रसूते चन्द्रस्य मर्त्यं महदर्थयुक्तम् ।
विवेकिनं सर्वकलासुदक्षं विपक्षहीनं सुतलालसञ्च ॥ ३० ॥

### भौमस्य द्रेक्काणे शनिफलम्

भागे तृतीये वनिजस्य सौरश्चौरं शठं प्रेष्यकरं प्रसूतेः ।
सुनिष्ठुरं पापरतं नृशंसं व्यपेतलज्जं गतसौहृदञ्च ॥ ३१ ॥

### बुधस्य द्रेक्काणे शनिफलम्

द्रेष्काणसंस्थः शशिजस्य सौरः करोति मर्त्यं बहुशास्त्रयुक्तम् ।
विज्ञानिनं धर्मरतं प्रशंस्यं स्वदारतुष्टं गतसाध्वसञ्च ॥ ३२ ॥

### गुरोर्द्रेक्काणे शनिफलम्

द्रेष्काणसंस्थः सुरपूजितस्य सौरः प्रसूते द्विजदेवभक्तम् ।
प्रियंवदं सर्वसहं प्रगल्भं महज्जनैः पूजितसाधुदारम् ॥ ३३ ॥

**शुक्रस्य द्रेष्काणे शनिफलम्**

भागे तृतीये रविजः प्रसूते शुक्रस्य तिष्ठन्प्रचुरान्नपानम् ।
लाभान्वितं धर्मपरं सुमित्रं हतारिपक्षं व्यसनैर्वियुक्तम् ॥ ३४ ॥

**शनेर्द्रेष्काणे शनिफलम्**

स्ववन्हिभागे रविजः प्रसूते नरं सदाचारमनल्पसौख्यम् ।
नृपात्मजैः प्रीतिकरं वदान्यं विमुक्तरोगं बहुमित्रयुक्तम् ॥ ३५ ॥

**अथ विशेषः**

द्रेष्काणे केन्द्रगः कुर्यादुच्चस्थो भूपतिं ग्रहः ।
स्वक्षेत्रगश्चमूनाथं मित्रगश्चापि वाग्मिनम् ॥ ३६ ॥

द्रेष्काणे मित्रतुङ्गस्थैः शुभखेटैः शुभं भवेत् ।
समस्तकर्मतो दुःखं विपरीते न संशयः ॥ ३७ ॥

शत्रुनीचाश्रिता ये च तेषां तत्तुल्यकेतनौ ।
व्रणे घातादिकं चापि वदेत्तदनुपूर्वकम् ॥ ३८ ॥

द्रेष्काणपो यत्र गृहे तदङ्क संख्याः सहोत्थाः स यदा ससौम्यः ।
ते जीविनोऽथेतरथा मृताः स्युस्तत्सौहृदाद्यं सहजैः सुखाद्यम ॥ ३९॥

चेत्पुंग्रहास्ते सहजा भगिन्यः स्युः स्त्रीग्रहाश्चेदथवा पुमङ्गम् ।
चेद्भ्रातृसौख्यं भगिनीसुखं तद्भेदे स्वघातोऽरिमृतौ तदीशे ॥ ४० ॥

त्र्यंशपोऽरिमृतिगोऽशुभयुक् चेन्मृत्युमेति सदृत्तरूपातैः ।
बन्धुवैरमसदिन्दुयुतश्चेद्रोमशः श्रवणपृष्ठगदीना ॥ ४१ ॥

चेदर्कभौमो मृतिगौ तदाढ्यौ मृतिं वदेद्विद्युत आतपाद्वा ।
विषान्मृतिः स्यान्मृतिगे गुरुभ्यां युतेऽरिगे त्र्यंशपतौ करेऽङ्कः ॥ ४२ ॥

तत्तद्रेष्काणगाः पापास्तथैव फलदामताः ।
द्वाविंशेऽङ्गादृकाणे तु तद्ग्रहादिवशाच्च्युतिः ॥ ४३ ॥

लग्ने दृकाणाधिपतिस्तु सौम्यः शुभग्रहैर्युक्तनिरीक्षितश्च ।
सत्कर्मकर्ता बहुकीर्तियुक्तः पापग्रहैः स्यादशुभश्च तत्र ॥ ४४ ॥

## अथ लग्नगतमेषादिनवांश फलमाह

चौरः क्रियांशे सुखभाक् वृषांशे पुष्णाति विद्यां मिथुनांशके वा ।
कर्कांशके स्याद्धनवान् महांशः सिंहांशके क्लीवसमोऽङ्गनांशे ॥ १ ॥

शूरस्तुलांशे भृतकोऽष्टमांशे दासो हयांशे हिमगो वलिष्ठे।
पापो मृगांशे पिशुनोग्रचेष्टः कुम्भांशके मीनलवे प्रधानः ॥ २ ॥

## अथ लग्नगतनवांशफले विशेषः—

दीर्घाकुञ्चित मूर्धजोसमतनुः गौरो गभीराशय—
स्तेजस्वी सुरतोपचारकुशलः पापानुरक्तः सदा।
स्तब्धः साहसिकोऽतिचञ्चलधनो रक्तोत्यधर्मः सुखी
क्रूरः स्यादरिमर्दनोऽल्पतनयो भानोर्नवांशे नरः ॥ ३ ॥

**अन्यच्च**

लग्नस्य भागे नवमे विवस्वान्नरं प्रसूते विजितं खलञ्च।
नीचानुरक्तं वृजिनैः समेतं जिह्मस्वभावं सततं विशीलम् ॥ ४ ॥

भवति कनककान्तिर्नातिदीर्घो न खर्वः
प्रविरलतनुरोमा वासवेषः सुदृष्टिः।
बहुधनपरिपूर्णो धर्मशीलो गुणज्ञो
विषयसुखसुवेशः शीतरश्मेर्नवांशे ॥ ५ ॥

**अन्यच्च**

नवांशको रात्रिपतेर्विलग्ने, करोति मर्त्यं बहुशो धनाढ्यम्।
कृष्याप्तवित्तं सुतसौख्ययुक्तं प्रियातिथिं सर्वजनप्रियञ्च ॥ ६ ॥

केशाग्रे कपिलः सुवृत्तनयनः पृष्ठेर्नकिंचित्तनौ
गौराङ्गः कुनखी व्रणोङ्कितशिरा कामी बली मत्सरी।
धूर्तः स्त्रीधनसंग्रहेऽतिकुशलः प्रायोऽल्पधर्मः सुखी
क्रूरः शत्रुविमर्दनोऽतिकृपणः स्याद्भूमिजांशे नरः ॥ ७ ॥

**अन्यच्च**

नवांशको भूतनयस्य लग्ने करोति मर्त्यं बहुदुःखयुक्तम्।
पित्तज्वरासृक्परिपीडिताङ्गं प्रतापहीनं सततं कुचैलम् ॥ ८ ॥

श्यामश्चञ्चललोचनः समतनुविस्तीर्णवक्षस्थलो
दीर्घाकुञ्चितमूर्धजोऽपिदशनश्रोणीभिराशोभितः।
शीर्णश्चक्रयविक्रयेषु कुशलो धीरो धनाढ्यः सुखी
दिव्यस्त्र्यम्बरमाल्यभूषणरतः स्याच्चन्द्रजांशे नरः ॥ ९ ॥

**अन्यच्च**

लग्ने नवांशः शशिनन्दनस्य, करोति मर्त्यं बहुवित्तयुक्तम् ।
मेधाविनं सर्वसुखाधिभाजं, विवेकिनं पण्डितमल्पवैरम् ॥ १० ॥
श्यामाङ्गकमलोदरः सुवदनो नीलोत्पलाभेक्षणः
प्रांशुः शोभनमूर्द्धजोऽति विमलः पाणौ सुरेखाङ्कितः ।
बुद्धीशो ह्यतिथिप्रियो बहुगुणः शूरोऽङ्गनावल्लभो
वित्ताढ्यो मधुरस्वरः सुरगुरोरंशे भवन्मानवः ॥ ११ ॥

**अन्यच्च**

नवांशके देवपुरोहितस्य लग्ने विधत्ते सुतवित्तसौख्यम् ।
करोति गीते निपुणं मनुष्यं, सदा नराणां कुरुते च पूज्यम् ॥ १२ ॥
रक्तोपान्तोऽनयसितनयनो मञ्जुकेशः सुमूर्तः ।
कम्बुग्रीवो भवति विकलः श्यामवर्णः सुनाभिः ।
शूरः श्रीमान्सुशीलः कविरतिसधनो दानशीलो गुणज्ञः ।
वस्त्रालङ्कारतुष्टः सुकुसुमनिरतो मानवो भार्गवांशे ॥ १३ ॥

**अन्यच्च**

नवांशको भार्गवनन्दनस्य लग्ने विधत्ते बहुपुत्रभोगान् ।
सुरूपचेष्टं गुणिनं समृद्धं दिव्याङ्गनाभोगसुखं सदैव ॥ १४ ॥
प्रविरलतनुशोभा बभ्रुकेशः कृशाङ्गो
भवति ललितनेत्रः श्यामवर्णः स्वतंत्रः ।
बहुगुणपरिपूर्णः पापशीलो विधर्मा
परिमितधनभागी मानवो भानुजांशे ॥ १५ ॥

**अन्यच्च**

नवांशकः सूर्यसुतस्य लग्ने नृणां विधत्ते बहु भूमिनाशम् ।
अर्थक्षयं न्यायमनन्तमुग्रं प्रपोषणं चौरक्षतं सदैव ॥ १६ ॥

## अथ केवललग्नस्थ प्रथमादिनवांशफलम्

पिशुनश्चपलो धृष्टः पापकर्मरतः सदा ।
परेषां व्यसनासक्तश्चौरश्च **प्रथमांशके** ॥ १६ ॥

धार्मिकः सत्यवादी च नानाशास्त्रविशारदः ।
दृढव्रतो महोत्साही **द्वितीयांशे** भवेन्नरः ॥ १७ ॥

उत्पन्नविभवो भोक्ता संग्रामे विगतस्पृहः ।
गान्धर्वे प्रमदासक्तस्तृतीयांशकसम्भवः ॥ १८ ॥

चतुरंशकजातं स्मरणाद्वीक्षणादपि ।
सर्वस्वं संग्रहे नित्यं यत्किञ्चिद्दिविभूतले ॥ १९ ॥

सर्वलक्षणसम्पन्नो धनी भवति सर्वतः ।
दीर्घायुर्बहुपुत्रश्च यो जातः **पञ्चमांशके** ॥ २० ॥

स्त्रीनिर्जितोऽनपत्यश्च बहुमायो नपुंसकः ।
दृढवैरो महोत्साहो जातः **षष्ठे नवांशके** ॥ २१ ॥

विक्रान्तो मतीमान् शूरः संग्रामे वा पराजितः ।
दृढबुद्धिर्महोत्साहो यो जातः **सप्तमांशके** ॥ २२ ॥

स्वधर्मकुशलो दक्षः सिञ्जितात्मा जितेन्द्रियः ।
भृत्यानां पोषणे दक्षा यो जातश्चा**ष्टमांशके** ॥ २३ ॥

अष्टमांशकजातस्य ये गुणाः संप्रकीर्तिता ।
नवमेंशे प्रजातस्य त एव कथिता बुधैः ॥ २४ ॥

**इति लग्ननवांश फलम्**

## अथ पृथक् पृथक् नवांशफलम्

अतोंऽशके लग्नगते तु वक्ष्ये वर्णस्वभावाकृतिलक्षणानि ।
प्रधानवीर्येंऽशपतौ शशीव तत्स्वामिराशि क्रमशो विधत्ते ॥ १ ॥

**मेषस्य**

अजसंस्थानमुखः स्यान्मेषाद्यांशेऽल्पनासिकाङ्गभुजः ।
चण्डध्वनिर्विरूपः संकुचिताक्षः कृशोऽक्षताङ्गश्च ॥ २ ॥

श्यामगुरुस्कन्धभुजो ह्रस्व ललाटः सुजत्रुकः स्फुटदृक् ।
दीर्घास्यनसो मृदुवाक् **द्वितयभागे** कृशांघ्रिसन्धिश्च ॥ ३ ॥

व्यालुप्तकेशगौरो व्यस्तभुजश्चारुनयननासश्च ।
**वाक्पण्डितस्तृतीये** जातस्तु कृशोरुजानुजंघश्च ॥ ४ ॥

विभ्रान्तदृक्प्रचण्डो ह्रस्वनटोऽटनखरांघ्रिरोमा च ।
अभ्रातृकः कृशः **स्याचचतुर्थे** नवभागजः पुरुषः ॥ ५ ॥

दृप्तो गजेन्द्रनयनः पृथुनासाभ्रूललाटको मध्ये ।
पीनोपचिताग्रतनुः खरतररोमाङ्कितनुकेशः ॥ ६ ॥

श्यामो मृदुर्मृगाक्षो गुरुः कृशास्फिक् कठोरु चरणः स्यात् ।
व्यस्तोदरकभुजांशः षण्ढो भीरुश्च बहुभाषी ॥ ७ ॥

दूर्वाङ्कुराम्भचपलः सितनेत्रः सप्तमे भवेत्पुरुषः ।
कुलटा पतिर्नृशंसो विशालविस्तीर्णमूर्तिः स्यात् ॥ ८ ॥

वानरमुख प्रवक्ता खरपिंगतनुश्च गुह्यगदः ।
हिंस्रोऽनृतघातरतः सुहृत्प्रयोग्रः सदाष्टमजः ॥ ९ ॥

दीर्घः कृशो विहारी व्यस्तललाटश्रवोऽश्ववदनश्च ।
बह्वभिधानाभिरतस्त्वनृजुर्नवमांशजो भवति ॥ १० ॥

इति मेषे ।

## अथ वृषभस्य

समकृष्णतनुस्तब्धः पूर्वं मघान्त्येऽन्तकर्मा स्यात् ।
नीचः प्रकृतिविरुद्धो विषमाक्षिनिरीक्षणो वृषस्याद्ये ॥ ११ ॥

गम्भीरदृगलसात्मा विनतशिरावक्त्रकश्च लघुमेधाः ।
प्रतिकूलकर्म मिथ्याबहुप्रलापी द्वितीये स्यात् ॥ १२ ॥

मृद्वङ्गवान्वपुष्मान् सुनसस्पष्टायताक्षवृहदङ्गः ।
यज्ञादिकर्मनिरतः स्थिरपोष्णिकरस्तृतीय नवमांशे ॥ १३ ॥

ह्रस्वोदरः सुरोषो मेषाक्षः पिंगलस्त्वघनयुक्तः ।
परधनहरणाभिरतश्चतुर्थभागे वृषस्य नरः ॥ १४ ॥

व्यालः सुतुंगघोणो महर्षभाकारवक्त्रघनकेशः ।
स्यात्पञ्चमे विलासी बृहद्भुजस्कन्धकटिगौरः ॥ १५ ॥

स्वक्षस्थिरः सुकेशः स्निग्धतनुर्वल्गुवाक् प्रगल्भः स्यात् ।
माधुर्यहास्यनिरतः कृशः सनिपुणो भवेत्षष्ठे ॥ १६ ॥

मृतसुतयुवतीषु रतो मनाक्प्रलम्बाग्रनासिकाक्षः स्यात ।
उद्वद्धाङ्गः स्वजनद्वेषागुरुपादसूक्ष्मकेशश्च ॥ १७ ॥

व्याघ्रेक्षणः सुदनस्त्वजितस्फुटनासिकोऽल्पकर्मः स्यात् ।
उद्वृत्तनीलकेशोग्रनखो मुखरस्तथाष्टमजः ॥ १८ ॥

मान्योऽल्पसत्वभीरूः क्रोधी समरुचिरमूर्ति कितवः स्यात् ।
सञ्चितधनः प्रसिद्धः कृशस्त्वधस्तात्प्रलाप्यन्ते ॥ १९ ॥

**इति वृषभे ।**

## अथ मिथुनस्य

रोमोपचितांस भुजो घना सितापाङ्गदृक् तथोच्चनसः ।
दूर्वाकाण्डश्यामः कृशाङ्घ्रिपाणिस्तृतीयभवनाद्ये ॥ २० ॥

घटशीर्षो शुचिकर्मा घातर्मध्यलग्न घोणः स्यात् ।
बहुभाषी बहुचेष्टो **द्वितीयभागे** तु विग्रहाधिपतिः ॥ २१ ॥

गौरोऽतिरक्तनयनः सुनासिकः समतनुः सुमेधाः स्यात् ।
दीर्घाननो सितभ्रूर्वाचा चतुरस्तृतीयेंऽशे ॥ २२ ॥

सुभ्रूललाटकामी नीलोत्पलमूर्ति विपुलवक्षाः स्यात् ।
सितवक्त्रो मृदुवक्रः प्रशस्तरोमाचितश्चतुर्थेंऽशे ॥ २३ ॥

पृथ्वाननो बृहत्स्फिक् पीवरवक्षोभुजश्च खलः ।
स्थूलशिरा मायावी सितानुकूलनयनस्तु **पंचमजः** ॥ २४ ॥

मध्वीक्षणः प्रलापी व्यस्तललाटः समस्सुतनुः ।
कितवखलश्च रुधिरोष्ठरदः **षष्ठे** तु सत्वयुतः ॥ २५ ॥

ताम्रारुणाक्षवर्णः समुन्नताक्षो विशालवृक्षाः स्यात् ।
शिक्षासु शिल्पनिपुणा हास्यरतिः **सप्तमे** जातः ॥ २६ ॥

श्यामो गुरुर्मनस्वी ललितो मधुराभिधानश्च ।
व्यस्तविवृद्धशरीरो दीर्घासितदृक् कलाविद**ष्टमजः** ॥ २७ ॥

वृत्तासितदृक् सुतनुः सिद्धो मेधाबलो रतिज्ञः स्यात् ।
विज्ञानकाव्यनिरतो **नवमे** जायेत मिथुनस्य ॥ २८ ॥

**इति मिथुने ।**

## अथ कर्कस्य

निर्मलचारुसुगौरः सुमूर्द्धजः स्याद्विशालकुक्षिश्च ।
मङ्गलमुखोन्नताक्षस्तन्वङ्गभुजः **कुलीराद्ये** ॥ २९ ॥
रक्तच्छविचरणोढः कलाप्रियः स्याद्विडालमुखनेत्रः ।
**कर्किद्वितीयभागे** त्यागी कृशजानुजंघश्च ॥ ३० ॥

गौरः सुनेत्रवाग्मी सुकुमारः स्थूल योषिदङ्गश्च ।
धीमात्मृदुकर्मरतस्तृतीयभागे भवेदलसः ॥ ३१ ॥

श्यामच्छविर्नतभ्रू विलास पीनोन्नतः सुनासाक्षः ।
क्षीणः पुरुषो दाता सुजातिकार्यश्चतुर्थे स्यात् ॥ ३२ ॥

घण्टाशिरो नतास्यः सुसंहतभ्रूः सुदीर्घबाहुः स्यात् ।
सेवारतो विकर्मा **मध्ये** दुर्मर्षणोऽल्पमेधाश्च ॥ ३३ ॥

दीर्घविशालशरीरः प्रशस्तनयनो बहुप्रतापः स्यात् ।
गौरः सुवंशघोणो वक्ता **षष्ठेच** पृथुदन्तः ॥ ३४ ॥

भिन्नशिरोरुहरोमा बृहत्तनुः स्यात्सिरालजंघश्च ।
परगृहरक्षणशिलः काकाकारश्च **सप्तमजः** ॥ ३५ ॥

घण्टाशिराः कुशिल्पी सुमुखभुजाङ्गश्च कूर्मगतिः ।
मध्यविलग्ननसः **स्यादष्टमभागेतु** कृष्णश्च ॥ ३६ ॥

गौरो झषनेत्रगुरुर्मृदूदरोऽथ पृथुपीनवक्षाः स्यात् ।
दीर्घहनुर्लवोष्ठो महोरुकृशजानुगुल्फो**ऽन्त्ये** ॥ ३७ ॥

**इति कर्कटे**

## अथ सिंहस्य

मन्दोदरः प्रचण्डो रक्ताग्रनसो बृहच्छिराः शूरः ।
उन्नतमांसलवक्षाः सिंहे **प्रथमे** भवेद्भागे ॥ ३८ ॥

उन्नतविततललाटश्चतुरस्रतनुर्विलोमनेत्रश्च ।
दीर्घभुजोन्नतवक्षाः पृथूग्रघोणो **द्वितीयेंशे** ॥ ३९ ॥

रोमान्वितायतभुजश्चकोरनयनश्चलस्त्यागी ।
उन्नासिकस्**तृतीये** स्निग्धतनुर्वाहुवृत्तगलः ॥ ४० ॥

घृतमण्डगौरगात्रो दीर्घासितलोचनो मृदुशिरोजः ।
भिन्नध्वनिश्**चतुर्थे** पृथुकरश्चरणश्च भेक कुक्षिः स्यात् ॥ ४१ ॥

घण्टाशिरोऽल्पकेशो सितघोणाक्षश्च ।
लोमशाङ्गतनुः लम्बोदरप्रचण्डो दंष्ट्रोत्कटपीनहृन्**मध्ये** ॥ ४२ ॥

स्रस्ताल्परोममूर्तिः स्निग्धसमासितविलोचनो दीर्घः ।
श्यामस्त्रीणां चतुरो विकत्थनो वाक्यपण्डितः **षष्ठे** ॥ ४३ ॥

दीर्घाननः सिरालः पीनतनुः स्त्रिषु दुर्भगः कृष्णः।
**स्यात्सप्तमे** सुचण्डो रोमचितः कूटनिष्ठुराभाषी ॥ ४४ ॥

उत्कृष्टवाक् स्थिरांगः सुभगो गम्भीरदृग्विकर्माच।
निःस्वः कूटकरः **स्यादष्टमभागे** प्रसूतश्च ॥ ४५ ॥

रासभमुखोऽसिताक्षो व्यालम्बभुजः सुपार्ष्णिजंघश्च।
श्वासनिपीडितवक्षा **नवमांशे** जायते मनुजः ॥ ४६ ॥

**इति सिंहे।**

**अथ कन्यायाः**

सारंगाक्षो वक्ता प्रदानसम्भोगवान् धनाढ्यश्च।
श्यामोन्नतहृदयः स्यात्षष्ठे **प्रथमांशके** जातः ॥ ४७ ॥

पूर्णाननः सुचक्षुः स्निग्धो मृदुवादशीलश्च।
लम्बोदरश्चलः **स्याद्वितीयभागे** महोरुश्च ॥ ४८ ॥

स्फुटनासिका स्फुटः स्यात्प्रशस्तपादश्च पीनपादभुजः।
विस्पष्टभाक् च गौरः कन्यासु **सुचतृतीयेंशे** ॥ ४९ ॥

श्रुतवान् स्त्रीषु च रमते सुकुमारो मधुररक्तगौरश्च।
तीक्ष्णश्**चतुर्थभागे** प्रबोधनोधः कृशो द्विमूर्धा च ॥ ५० ॥

स्थूलोष्ठबाहुरुन्नततनुः पृथुशिरोरुहांसः स्यात्।
**पञ्चमजः** पृथुवक्षाः पराश्रयोद्बद्धजङ्घश्च ॥ ५१ ॥

स्निग्धच्छविः सुवाक्यः शस्ततनुः शास्त्रकृतमतिप्रचुरः।
लिपिलेख्यकलाभिज्ञः सुमनाः **षष्ठांशजो** विहारी च ॥ ५२ ॥

ह्रस्ववदनोन्नतांसः स्निग्धभुजोऽन्ते च केशगौरः स्यात्।
**सप्तमजः** पृथुजठरः पृथुतरचरणोऽम्बुभीरुश्च ॥ ५३ ॥

सुकुमारगौरदीर्घश्चित्रोन्नतदृक प्रचण्डमानी स्यात्।
व्यालम्बपीनबाहुः पिंगलरोमा**ष्टमे** **जातः** ॥ ५४ ॥

ख्यातो मृदुसुखविशालनेत्रो बलासदृशसत्वः।
चतुरो **नवमेंशेस्यान्नतांस** लेख्यादिविद्वांश्च ॥ ५५ ॥

**इति कन्यायाम्।**

**अथ तुलायाः**

गौरो विशालनेत्रः श्लाघी दीर्घाननोऽर्थगोप्ता स्यात् ।
नवपण्यकर्मकुशलस्तुलाधराद्यंशजः सुविख्यातः ॥ ५६ ॥

प्लुतमंडलनेत्रः स्यात् करालदन्तो निमग्नमध्यस्तु ।
**युगले** विस्मृतहृदयः कुतनुर्घनसंहतभ्रूश्च ॥ ५७ ॥

गौरोऽश्वमुखः सुरदो महोन्नताक्षः कृशोऽपिलब्धयशाः ।
दीर्घकरोरुहघोणस्तृ**तीयजः** स्यात्सुचरणश्च ॥ ५८ ॥

तन्वंसबाहुर्भीरुस्तून्नतदन्तकृशो मृगतरलदृक् ।
ह्रस्वनसः सुविषादी श्यामो शीलश्च**तुर्थजः** भवति ॥ ५९ ॥
गम्भीरदृक् स्थिरात्मा सुहृत्प्रियः **पञ्चमे** ह्यमानी स्यात् ।
खरकेशः समनेत्रो मध्यप्रतिलग्नघोणदृप्तश्च ॥ ६० ॥

पीनाङ्गो गौरः स्याद्विशालनेत्रः सुनासिका वंशः ।
स्निग्धनखः सुनयज्ञः **षष्ठेंशे** शास्त्रविज्जातः ॥ ६१ ॥

रक्तावदातमतिमान् गुरुह्रस्वतनु कृशो ललाटे स्यात् ।
लुब्धः प्रचण्डदुर्गः **सप्तमभागे** मनस्वी च ॥ ६२ ॥

तुगांसगण्डभोक्ता कठिनतनुर्दीर्घकृष्णभ्रूः ।
निर्निक्तवाक् प्रशान्तः सद्वक्षस्त्वर्धमस्तको**ऽष्टमजः** ॥ ६३ ॥

स्वक्षः प्रसन्नगौरः समचारुतनुः पटुः कलाभिरतः ।
दाक्षिण्यहास्यनिरतो विटस्वभावो **भवेन्नवमे** ॥ ६४ ॥

**इतितुलायाम् ।**

**अथ वृश्चिकस्य**

ह्रस्वोन्नतोष्ठघोणः सुललाटः स्यात् दृढाङ्गगौरश्च ।
दर्दुरकुक्षिर्घटकोऽष्टमराशौ **प्रथमनवभागे** ॥ ६५ ॥

गौरः पृथ्वायतहृद्बाहुस्ताम्रोग्रदृग् **द्वितीये** स्यात् ।
उद्वृत्तबलनिहन्ता साहसकृदनल्पकेशश्च ॥ ६६ ॥

प्राज्ञो दृढांसबाहुः प्रयत्नकोशो विशुद्धवाक्यः स्यात् ।
कानीनको वपष्मान् गौरो रुचिराधरस्**तृतीयेंशे** ॥ ६७ ॥

परदाररद्रोहरतिः क्षेप्ता धीरश्चतुर्थजो दीर्घः ।
श्यामोऽसितकेशाक्षो नटः प्रगल्भश्च पीनरोमांसः ॥ ६८ ॥

गम्भीरस्ताम्राक्षो मग्ननसः **पञ्चमे** धीरः ।
मृष्टोदरोग्रकर्मा व्यस्तदृढाङ्गो यशस्वी स्यात् ॥ ६९ ॥

धृष्टो वरिष्ठबुद्धि पृष्ठोच्चनसो गभीरसत्वः स्यात् ।
सुनसः प्रचण्डकर्मा **षष्ठे** दक्षोऽल्पकचघनभ्रूश्च ॥ ७० ॥

दारितमुखः स्थिराङ्गः प्रविकीर्णरदः शिरावनद्धाङ्गः ।
निम्नोदरः प्लुताक्षः स्रस्ततनुः **सप्तमे** भवेदंशे ॥ ७१ ॥

स्फुताग्रनसः कालो विपन्नशीलो मलीमसाङ्गः स्यात् ।
भिन्नोत्कटैः शिरोजैः सन्त्यक्तमतिस्त**थाष्टमजः** ॥ ७२ ॥

गौरो मृगाकृतिर्मृदुः प्रशान्तपिङ्गाक्षरोमदृढपीनः ।
सुसमेतश्च गुरूणां मतः प्रजातो **नवम** भागे ॥ ७३ ॥

**इति वृश्चिके ।**

**अथ धनुषः**

सुबृहन्नसोजदृष्टिः स्फुटाग्रभाषी सुदन्तरोमा च ।
गौरः सुबुद्धवृषण**श्चापाद्यांशे** प्रचण्डः स्यात् ॥ ७४ ॥

प्रोत्तुङ्गशिराः स्थिरविद्धिस्तीर्णाक्षो गुरुस्फिगुरुश्च ।
विकृताक्षनसो दीर्घो महाहनुः **स्याद्द्वितीयेंशे** ॥ ७५ ॥

शिक्षाशास्त्रमतिज्ञः प्रगल्भगम्भीरमूर्त्ति सुनयश्च ।
स्त्रीवल्लभो मनस्वी **तृतीयजो** हास्यशिल्पज्ञः ॥ ७६ ॥

दक्षो मधुमण्डलदृक् गौरः कृच्छ्र प्रवृद्धकुक्षिः स्यात् ।
प्राज्ञोऽटनः सुकेशः पृथुशुभमूर्त्ति**श्चतुर्थे** स्यात् ॥ ७७ ॥

पृथुकण्ठनेत्रवदनः प्रवृद्धहरिविग्रहो महाभ्रूः स्यात् ।
पीनोन्नतांसहन्ता **पञ्चमजो** रूढरोमदृढबुद्धिः ॥ ७८ ॥

स्निग्धा सितान्त पृथुदृक् महाललाटः सुवृत्तिकाव्यरतः ।
पृथुपीनमुखो हीनः **षष्ठे** विद्वान् कथाभिरतः ॥ ७९ ॥

श्यामो मृदुर्वचस्वी तुङ्गशिराः संग्रहानुसन्धिरतः ।
दीर्घो विशालनयनो दाक्षिण्यपटुश्च **सप्तमजः** ॥ ८० ॥

चिपिटाग्रनासिकः स्याद्विस्तीर्णशिराः सुबद्धवैरश्च ।
विभ्रान्तदृक् प्रलापी गुरुष्वभिमतोऽष्टमांशभवः ॥ ८१ ॥
गौरो हयाकृतिमुखो दीर्घासितदृक् तथाल्पवाक्यः स्यात् ।
सत्यः सतां विषादी **नवमे** कुटिलोरुजङ्घश्च ॥ ८२ ॥
**इति धनुषि ।**

**अथ मकरस्य**

विरलाग्ररदः श्यामः प्रभिन्नवाक् खरसिरोरुनखजानुः ।
गीताध्वहासनिरतो **मकराद्ये** बलधनः कृशाङ्गः स्यात् ॥ ८३ ॥
अलसशठः कुटिलनसो गीताभिरतिर्विशालदेहश्च ।
प्रचुरांगनासु निरतो बहुभाषी **स्याद्द्वितीयजः** कल्प्यः ॥ ८४ ॥
गन्धर्वकलाकामः ख्यातांगो गौरदृक् सुनसः ।
बहुमित्रबन्धुरतिमान् **तृतीयजः** स्वीष्टकर्मा च ॥ ८५ ॥
रक्तासितवृत्ताक्षो महाललाटभुजदुर्बलांगकरः ।
भवति हि विकीर्णकेश**श्चतुर्थजो** विरलदन्तवाक्यः स्यात् ॥ ८६ ॥
उद्दण्डघोणकुक्षिर्भवति हि भोगता सुनासिकावंशः ।
श्यामो वृत्तोरुभुजः **पञ्चमभागे** स्थिरारम्भः ॥ ८७ ॥
स्निग्धच्छविः सुवेषः कामरतः सूक्ष्मसमरदसुवक्ता ।
**षष्ठांशजः** पृथुहनुर्महाललाटः पुमान् भवति ॥ ८८ ॥
श्यामोऽलसः सुभाषी रूक्षितदेहो वृहत्तनुः कठिनः ।
मृदुपादपाणा **मतिमान्सप्तमजः** शालसम्पन्नः ॥ ८९ ॥
गम्भीरदृक्सुघोणो रक्तास्योभिन्ननखशिरोजः स्यात् ।
उद्बद्धतनुः शक्तो**ऽष्टमजो** घट पृथुललाटश्च ॥ ९० ॥
विपुलाक्षि हृत्सुमेधाः पूर्णमुखो गीतवाद्यनिरतश्च ।
माधुर्यसत्वयुक्तः साधु**र्नवमे**भवेत्सुजनः ॥ ९१ ॥
**इतिमकरे ।**

**अथ कुम्भस्य**

श्यामो मृदुकृशाङ्गः पीनहनुः शास्त्रकाव्यमतिः ।
कामी रतिमान्कान्तः **कुम्भस्याद्यांशके** भवेज्जातः ॥ ९२ ॥

त्वङ्नखदृष्टिशिरोजैः खरैश्च सुविपन्नवत्सलः साधुः।
दीर्घो विशिरा मूर्खो द्वितीयभागे भवेज्जातः ॥ ९३ ॥

संसक्ततनुः प्रमदाप्रियश्च वैडूर्यकान्तिधरः।
शास्त्रार्थवित्प्रयोक्ता तृतीयनवभागसंजातः ॥ ९४ ॥

कान्तानुरतो गौरो विदारितास्यो रिपुप्रणाशकरः।
गम्भीरधीरसत्वश्चतुर्थजो भोगरतियुक्तः ॥ ९५ ॥

स्पष्टार्थवित्कलाज्ञः खररोमधराङ्घ्रिरुग्रः स्यात।
संरुद्धगण्डकर्णः पञ्चमजः कृष्णवर्णश्च ॥ ९६ ॥

व्याघ्राननः प्रगल्भः कुञ्चितकेशः सुनिश्चितार्थश्च।
व्यालमृगोरगहन्ताषष्ठेंशेवल्लभो नृपते. ॥ ९७ ॥

मेषाक्षिमुखस्तीक्ष्णो ग्राम्यरतिस्त्रीषु परिभूतः।
पित्तरुगर्दितदेहः सप्तमजः सत्वधृतियुक्तः ॥ ९८ ॥

स्थिरसत्वबुद्धिरतिमान् नरेन्द्रयोधो नरेश्वरः शुभगः।
स्थूलरदो विपुलाक्षः कुम्भे स्यादष्टमेंशके पुरुषः ॥ ९९ ॥

श्यामः समग्रवदना विशेषितः सुधनदारपुत्रश्च।
नवमांशजः सुवाक्यः प्रथितः शक्तो भवेत्पुरुषः ॥ १०० ॥

इति कुम्भे।

अथ मीनस्य

गौरोऽपि रक्तदेहः प्रभामृदुस्त्रीमति प्रचलचित्तः।
ह्रस्वगलः कृशमध्यो मीनस्याद्यांशके पुरुषः ॥ १०१ ॥

पृथुपीनभुग्ननासः क्रियापटुर्मांसभुग्रुचिरदेहः।
काननपर्वतचारी बृहच्छिराः स्याद्द्वितीयांशे ॥ १०२ ॥

गौरः शठः सुचक्षुः शस्ततनुर्धर्मवान् सुविद्वांश्च।
दाक्षिण्यवान् विनीतस्तृतीयजो रूपवांश्चतुरः ॥ १०३ ॥

गुणवान् विपन्नशालः प्रवृद्धसेवी क्रियापटुर्विद्वान्।
सत्वादिको नयज्ञस्तुङ्गनसः स्याच्चतुर्थे तु ॥ १०४ ॥

दीर्घोऽसितः प्रतापी तुङ्गाङ्गः स्वल्पनासिकः स्वक्षः।
हिंसारतिः शुभरदो दुष्प्रसहः पञ्चमे प्रतापी स्यात् ॥ १०५ ॥

कान्तः प्रतापगुणवान् प्रसन्नवंशोऽल्पनासिको मानी ।
तिर्यग्वदनः ख्यातःषष्ठेंशे स्यात्तथा निपुणः ॥ १०६ ॥

पुरुषाभिमानापरक्तद्धर्मरुचिः श्रेष्ठगश्च सचिवः स्यात् ।
प्रबलो विषादशीलः शठोऽस्थिरः सप्तमे भागे ॥ १०७ ॥

दीर्घो वृहच्छिराः स्यात्कृशोऽलसो रूक्षनेत्रकेशश्च ।
मन्दात्मजोऽर्थनिरतो रणकुशलो ह्यष्टमे भागे ॥ १०८ ॥

ह्रस्वोमृदुः सुधीरो विशालवक्षोक्षिनासिकः स्निग्धः ।
विहिताङ्ग बुद्धिगुणवान् नवमेंशे स्यात्पुमान् ख्यातः ॥ १०९ ॥

**इतिमीने ।**

यत्प्रोक्तांशादिफलं द्वादशभागेऽपि तत्फलं वाच्यम् ।
सप्तमभागसमानं शेषेषु विनिर्दिशेत्प्राज्ञः ॥ ११० ॥

## अथ सर्वेषां ग्रहाणां नवांशे सूर्यफलमाह

### तत्रादौ सूर्यस्य स्वनवांशे फलम्

नवांशके स्वे सविता प्रसूते नरं पराभूतमनल्पसौख्यम् ।
कलिप्रियं वक्रिणमद्यशीलं गतप्रभावं वहुरोगभाजम् ॥ १११ ॥

### चन्द्रस्य नवांशे सूर्यफलम्

नवांशके रात्रिपतेर्विवस्वान्करोति मर्त्यं स्थित एव दक्षम् ।
सुतान्वितं ज्ञानयशोधनाढ्यं नृपप्रियं मुख्यतमं स्वपक्षे ॥ ११२ ॥

### भौमस्य नवांशे सूर्यफलम्

कुजस्य भानुर्नवभागसंस्थो दरिद्ररोगाभिहतं प्रसूते ।
निराकृतं दीनमरुत्प्रकोपं पापानुरक्तं कृतजार्तिभाजम् ॥ ११३ ॥

### बुधस्य नवांशे सूर्यफलम्

तिष्ठन्रविः सोमसुतस्य जातं नवांशके वातभयं करोति ।
जितारिपक्षं सुतयानुरक्तं नरं सदा भोगसुखैरुपेतम् ॥ ११४ ॥

### गुरोर्नवांशे सूर्यफलम्

नवांशके देवपुरोहितस्य तिष्ठन् रविः सत्यधनं प्रसूते ।
तपोनुरक्तं कृतिनामभीष्टं जितेन्द्रियं सर्वसुखादिवासम् ॥ ११५ ॥

### शुक्रस्य नवांशे सूर्यफलम्

ईत्यान्वितं बन्धुजनप्रधानं विवेकिनं धर्मपरंजितारिम् ।
नवांशके देवपुरोहितस्य नरं प्रसूते सविता प्रगल्भम् ॥ ११६ ॥

### शनेर्नवांशे सूर्यफलम्

पराजितं निर्धनमल्पवीर्यं कामान्वितं बन्धुजनैर्वियुक्तम् ।
शनेर्नवांशे सविता प्रसूते नरं खलं दुर्गतिरोगभाजम् ॥ ११७ ॥

### सूत्रम्

उच्चेऽर्के नीचांशे राजपुत्रोऽपि नीचतां गच्छति ॥ ११८ ॥

नवांशवीर्यप्रबलो विवस्वान् नरं प्रसूते सततं मनोज्ञम् ।
विचित्रमाल्याभरणं सुखाढ्यं प्रशान्तचित्तं निरुजं सुशीलम् ॥ ११९ ॥

सूर्यो नवांशात्मकवीर्यहीनो करोति मर्त्यं प्रियविग्रहं च ।
विषाग्निशस्त्रज्वरपित्तभाजं पितुर्जनन्या विकृत्तोपचारम् ॥ १२० ॥

## अथ सर्वेषां ग्रहाणां नवांशे चन्द्रफलमाह

### तत्रादौ सूर्यस्य नवांशे चन्द्रफलम्

नवांशके रात्रिपतिर्यदा स्यात् सूर्यस्य दुष्टं मनुजं प्रसूते ।
स्त्रीचञ्चलं पापरतं सदैव प्रनष्टबुद्धि विजितं परैश्च ॥ १२१ ॥

### चन्द्रस्य नवांशे चन्द्रफलम्

नवांशके स्वे प्रकरोति चन्द्रो नरं सुरूपं सुभगं सुशीलम् ।
स्त्रीसंमतं सर्वगुणैः समेतं विद्याविनीतं जनवल्लभञ्च ॥ १२२ ॥

### भौमस्य नवांशे चन्द्रफलम्

नवांशके भूमिसुतस्य चन्द्रस्त्वसृग् रुगार्ति प्रकरोति मर्त्यम् ।
क्लीबं कृशं व्याधितमल्पसत्वं स्त्रीदुर्भगं कामपरं सदैव ॥ १२३ ॥

### बुधस्य नवांशे चन्द्रफलम्

सौम्यस्य भागे नवमे शशाङ्कः करोति सौम्यं सततं सुखाढ्यम् ।
नित्यं सुहृद्देवगुरुप्रसक्तं महाधनं पण्डितमप्रमेयम् ॥ १२४ ॥

### गुरोर्नवांशे चन्द्रफलम्

गुरोर्नवांशे विचरन् शशाङ्कः करोति मर्त्यं नयसत्यसारम् ।
विद्याविनीतं सुहृदां वरिष्ठं द्विजप्रियं रोगभयं व्यपेतम् ॥ १२५ ॥

### शुक्रस्य नवांशे चन्द्रफलम्

शुक्रस्य भागे नवमे शशांको नरं प्रसूते बहुवित्तवन्तम् ।
पुत्रान्वितं पुण्यधनैरुपेतं प्रियाऽऽतिथिं सर्वजनाभिरामम् ॥ १२६ ॥

### शनेर्नवांशे चन्द्रफलम्

चन्द्रः शनेर्भागमनु प्रयातो नवाख्यमत्यन्तदुरुक्तवाच्यम् ।
नरं प्रसूते विकृतस्वभावं परार्थ लुब्धं व्यसनैः समेतम् ॥ १२७ ॥

### विशेषः

नवांशपुष्टः प्रबलः शशाङ्को नरं विधत्ते सुतयानयुक्तम् ।
रोगैर्विमुक्तं सुकुमारदेहं भोगाधिकं सर्वकलासुदक्षम् ॥ १२८ ॥
नवांशवीर्येण विवर्जितस्तु नयेन हीनं पुरुषं शशांकः ।
करोति दुष्टं च तथा कृतघ्नं भीरुरुजार्तं नृपपीडितञ्च ॥ १२९ ॥

## अथ सर्वेषां ग्रहाणां नवांशे भौमफलमाह

### तत्रादौ सूर्यस्य नवांशे भौमफलम्

नवांशके वासरपस्य भौमो लुब्धं कुयोषित्हृतसंङ्गचित्तम् ।
तिष्ठन् विधत्तेऽल्पसुखं मनुष्यं हृद्रोगिणं बह्वशिनं शठञ्च ॥ १३० ॥

### चन्द्रस्य नवांशे भौमफलम्

चरन्नवांशे प्रकरोति भौमश्चन्द्रस्य कान्तं सुखमानयुक्तम् ।
सुहृद्द्विजातिथ्यपरं प्रशान्तं पूज्यं सतां बन्धुहिते रतञ्च ॥ १३१ ॥

### भौमस्य नवांशे भौमफलम्

नवांशके स्वे प्रचरन् करोति भौमोऽतिहिंस्रं विकृतं मनुष्यम् ।
खड्गादियुद्धे निपुणं विशीलं विद्वेषिणं साधुजनस्य नित्यम् ॥ १३२ ॥

### बुधस्य नवांशे भौमफलम्

बुधस्य भौमो विचरन्नवांशे करोति मर्त्यं प्रणतां द्विजानाम् ।
द्रव्यान्वितं धीरमुदारसत्वं विस्तीर्णसत्वं सुभगं सुखाढ्यम् ॥ १३३ ॥

### गुरोर्नवांशे भौमफलम्

गुरोर्नवांशे विचरन्महीजः करोति मर्त्यं विविधान्नपानम् ।
शूरं प्रचण्डं रणरंगरक्तं गतद्विपं यानवरैः समेतम् ॥ १३४ ॥

### शुक्रस्य नवांशे भौमफलम्

शुक्रस्य भागे नवमे तु भौमः करोति मर्त्यं रतिलुब्धसौख्यम् ।
सुहृद्गुरुप्रीतिकरं सुवाक्यं सुधर्मरक्तं बहुभृत्ययुक्तम् ॥ १३५ ॥

### शनेर्नवांशे भौमफलम्

शनेर्नवांशे विगतो महीजो नरं प्रसूते बहुपापरक्तम् ।
गुह्याक्षिरोगोपहतं सुदुष्टं प्रियाविहीनं परतर्ककञ्च ॥ १३६ ॥

### विशेषः

देवद्विजार्यार्चित लब्धकीर्ति शूरं सतामाश्रयमाप्तविद्यम् ।
भौमः स्वनन्दांशकवीर्ययुक्तः करोति मर्त्यं नृपमानयुक्तम् ॥ १३७ ॥

नवांशवीर्येण विवर्जितस्तु भौमः प्रसूते सरुजं मनुष्यम् ।
प्रपीडितं शत्रुकृतैर्विकारैः पराभवैर्मित्रकृतैस्तथैव ॥ १३८ ॥

## अथ सर्वेषां ग्रहाणां नवांशे बुधफलमाह

### तत्रादौ सूर्यस्य नवांशे बुधफलम्

चरन्नवांशे दिनपस्य सौम्यः करोति पापं विकृतं मनुष्यम् ।
स्त्रीसौख्यहीनं कलहप्रियञ्च द्यूतप्रियं चौर्यरतं विशीलम् ॥ १३९ ॥

### चन्द्रस्य नवांशे बुधफलम्

चन्द्रांशके स्यान्नवमे यदा ज्ञः तदा विधत्ते सुमुखं नितान्तम् ।
ख्यातञ्च पुष्टं तमुदारचेष्टं जेतारिमान्यं सुहृदां सताञ्च ॥ १४० ॥

### भौमस्य नवांशे बुधफलम्

नवांशके भूमिसुतस्य सौम्यो नरं विधत्ते रुधिरार्तदेहम् ।
वितर्कशीलं सुहृदामनिष्टं द्वेष्यं खलं पार्थिवपीडितञ्च ॥ १४१ ॥

### बुधस्य नवांशे बुधफलम्

नवांशके स्वे प्रकरोति सौम्यः, सौम्यं सुरूपं सुभगं मनुष्यम् ।
देवद्विजातिप्रवणं प्रसन्नं प्रियातिथिं सर्वजनानुकूलम् ॥ १४२ ॥

### गुरोर्नवांशे बुधफलम्

नवांशकस्थः सुरपूजितस्य सौम्यः प्रसूते सुखिनं मनुष्यम् ।
नानार्थलाभं प्रचुरप्रतापं सुमित्रयुक्तं प्रचुरं सुशीलम् ॥ १४३ ॥

### शुक्रस्य नवांशे बुधफलम्

शुक्रस्य भागे नवमे बुधस्तु करोति मर्त्यं विवधार्थयुक्तम् ।
प्रभूतमित्रद्विजपूजनेष्टं सुतान्वितं नित्यमुदारचेष्टम् ॥ १४४ ॥

### शनेर्नवांशे बुधफलम्

सौरस्य भागे नवमे वितिष्ठन् करोति सौम्यो निरुजं मनुष्यम् ।
कुशिल्पिनं साधुगुणैरयोग्यं पराङ्गनासक्तमनर्थयुक्तम् ॥ १४५ ॥

### विशेषः

नवांशवीर्येण युतस्तु सौम्यो नरं प्रसूते सततं मनुष्यम् ।
शुचिक्षमासत्यरतं कृतज्ञं मनस्विनं सर्वसुखाधिवासम् ॥ १४६ ॥
नवांशवीर्येण विवर्जितो ज्ञः कठोरवाक्यं जनयेन्मनुष्यम् ।
विमुक्तदेहं सहजायरक्तं विगर्हितं शीलपरिक्रियाभिः ॥ १४७ ॥

## अथ सर्वेषां ग्रहाणां नवांशे गुरुफलमाह

### तत्रादौ सूर्यस्य नवांशे गुरुफलम्

प्रेष्यः कुकर्मातिखलस्वभावो धनैर्विहीनस्त्वथमन्दसत्वः ।
नवांशके वासरपस्य जीवो यदा तदा स्यान्मनुजः प्रचण्डः ॥ १४८ ॥

### चन्द्रस्य नवांशे गुरुफलम्

नवांशके रात्रिपतेः सुरेज्यास्तिष्ठन्प्रसूते सुभगं मनुष्यम् ।
प्रियातिथिं प्रीतिकरं नराणां प्रसन्नचित्तं प्रमदास्वभीष्टम् ॥ १४९ ॥

### भौमस्य नवांशे गुरुफलम्

मुखादिरोगैः व्यसनोपतप्तं भयान्वितं पापरतं प्रकाशम् ।
नवांशके भूमिसुतस्य जीवस्तिष्ठन्प्रसूतेऽतिखलं मनुष्यम् ॥ १५० ॥

### बुधस्य नवांशे गुरुफलम्

बुधस्य भागे नवमे सुरेज्यस्तिष्ठन्प्रसूते सदयं मनोज्ञम् ।
वित्तान्वितं धर्मरतं सुवेषं शास्त्रार्थरक्तं गुरुभक्तियुक्तम् ॥ १५१ ॥

### गुरोर्नवांशे गुरुफलम्

जीवो नवांशे च यदा स्वकीये तदा मनुष्यं नृपतुल्यवेशम् ।
वित्तान्वितं सौख्यकलत्रयुक्तं शास्त्रार्थयुक्तं सुजनार्थवन्तम् ॥ १५२ ॥

### शुक्रस्य नवांशे गुरुफलम्

शुक्रस्य भागे नवमे सुरेज्यस्तिष्ठन्प्रसूते सुखिनं मनुष्यम् ।
तेजस्विनं कीर्तिकरं कृतज्ञं पुण्यात्मकं धर्मरतं सदैव ॥ १५३ ॥

### शनेर्नवांशे गुरुफलम्

नासाक्षिरोगव्यसनैः समेतं श्रियाविहीनं विगतप्रतापम् ।
नवांशकस्थो रविजस्य जीवो नरं प्रसूते नृपपीडितञ्च ॥ १५४ ॥

### विशेषः

नवांशवीर्येण विवर्जितस्तु सुरेन्द्रमन्त्री कुरुते भयार्त्तम् ।
पापादिरोगैः सहितं सुदीनं विहीनबुद्धिं विसुखं विशोकम् ॥

## अथ सर्वेषां ग्रहाणां नवांशे भृगुफलमाह

### तत्रादौ सूर्यस्य नवांशे भृगुफलम्

नवांशकस्थो दिनपस्य शुक्रः करोति मर्त्यं विकलं सुभीरुम् ।
बहुद्विषं निष्क्रियमल्पवीर्यं प्रपञ्चयुक्तं गतसत्वसौख्यम् ॥ १५५ ॥

### चन्द्रस्य नवांशे भृगुफलम्

नवांशकोभार्गवनन्दनस्तु चन्द्रस्य धत्ते तनयं नराणाम् ।
सद्योषितां वै धनधान्यलाभं, रिपुक्षयं बन्धुसमागमञ्च ॥ १५६ ॥

**भौमस्य नवांशे भृगुफलम्**

नवांशके भूमिसुतस्य शुक्रो नरं प्रसूते रुधिरार्द्दिताङ्गम् ।
प्रपीडितं दस्युनृपैः सदैव प्रद्वेषशीलं निकृतिप्रियञ्च ॥ १५७ ॥

**बुधस्य नवांशे भृगुफलम्**

बुधस्यभागे नवमे तु शुक्रः करोति मर्त्यं विबुधं सुधर्मम् ।
तीर्थाश्रयं देवगुरुप्रभक्तं प्रियातिथिं सन्नियमैरुपेतम् ॥ १५८ ॥

**गुरोर्नवांशे भृगुफलम्**

शुक्रो नवांशे सुरपूजितस्य करोति मर्त्यं प्रणतं द्विजानाम् ।
विवेकविद्यागमशास्त्रलुब्धं नृपप्रियं बन्धुजनैश्च सार्द्धम् ॥ १५९ ॥

**शुक्रस्य नवांशे भृगुफलम्**

नवांशके स्वे भृगुजः प्रसूते अध्यात्मविद्यानिरतं मनुष्यम् ।
स्वधर्मपूज्यं सुधिया समेतं हतारिपक्षं व्रतशीलिनञ्च ॥ १६० ॥

**शनेर्नवांशे भृगुफलम्**

स्थितो नवांशेऽर्कसुतस्य शुक्रो नरं प्रसूते सरुजं सदुःखम् ।
भार्यासुतार्थैः परिवर्जितञ्च प्रपीडितं नीचजनैर्विशेषात् ॥ १६१ ॥

**विशेषः—**

नवांशवीर्येण युतस्तु शुक्रः करोति मर्त्यं विजितारिपक्षम् ।
यज्ञप्रियं दानपतिं प्रसिद्धं निर्मुक्तदोषं स्वकुलप्रधानम् ॥ १६२ ॥
नवांशवीर्येण विवर्जितस्तु शुक्रः प्रसूतेऽतिकठोरचित्तम् ।
भयातुरं सत्यधनैर्विहीनं विद्वेषशीलं गतसौहृदञ्च ॥ १६३ ॥

## अथ सर्वेषां ग्रहाणां नवांशे शनिफलमाह

**तत्रादौ सूर्यस्य नवांशे शनिफलम्**

सूर्यस्य भागे नवमेऽर्कसूनुः करोति मर्त्यं बहुतीव्रकोपम् ।
हिंस्रप्रनष्टैः सुजनैर्वियुक्तं प्रद्वेषशीलं परिभूतमन्यैः ॥ १६४ ॥

**चन्द्रस्य नवांशे शनिफलम्**

चन्द्रस्य भागे नवमेऽर्कसूनुः नरं प्रसूते सुकलत्रयुक्तम् ।
शास्त्रानुरक्तं क्रतुदानशीलं जितेन्द्रियं मंत्रविदां वरिष्ठम् ॥ १६५ ॥

**भौमस्य नवांशे शनिफलम्**

शनैश्चरो भौमनवांशसंस्थो नरं प्रसूते वचनस्वभावम् ।
पराङ्गनासंगरतं विधर्ममित्रैर्विहीनं सततं कुचैलम् ॥ १६६ ॥

**बुधस्य नवांशे शनिफलम्**

शनैश्चरः सौम्यनवांशसंस्थः करोति मर्त्यं सुखभोगतृप्तम् ।
कान्तं शुभं लाभपरं विधिज्ञं प्रियातिथिं यज्ञरतं प्रधानम् ॥ १६७ ॥

**गुरोर्नवांशे शनिफलम्**

शनिर्नवांशे सुरपूजितस्य नरं प्रसूते सुरविप्रभक्तम् ।
विवेकविद्यागमसत्ययुक्तं प्रसन्नवक्त्रं प्रचुरान्नपानम् ॥ १६८ ॥

**शुक्रस्य नवांशे शनिफलम्**

मार्त्तण्डजः शुक्रनवांशसंस्थः करोति तीर्थाश्रयमिष्टधर्मम् ।
प्राज्ञं कृतज्ञं बुधलोकसेव्यं जितेन्द्रियं शुभ्रमतिं मनोज्ञम् ॥ १६९ ॥

**शनेर्नवांशे शनिफलम्**

नवांशके स्वे प्रकरोति सौरो नरं सुदातारतरं विरोगम् ।
सुयोषिताभोगप्रवृद्धसौख्यं जितारिपक्षं स्थिरमुग्रवीर्यम् ॥ १७० ॥

**विशेषः—**

नवांशवीर्येण विवर्जितोऽर्किः करोति नित्यं बहुशास्त्रयुक्तम् ।
पूर्वं सुहिंस्रं धनधान्यहीनं प्रमादिनं पार्थिवपीडितञ्च ॥ १७१ ॥

## अथ लग्नकुण्डल्यां पञ्चमादिस्थानेषु ग्रहफलम्

एकत्र पञ्चपुत्राणि धीस्थे तुर्ये कुजे गुरौ ।
द्विचतुःषट्सप्तमैश्च पुत्रदो ज्ञासिते शनिः ॥ १७२ ॥

सहजे च सिंहे सुतजीवकेतू षष्ठे शनिः सूर्यकलत्रसंस्थः ।
गर्भे च राहुर्दशमे च भौमः, सन्तानहानिश्च भवेन्नराणाम् ॥ १७३ ॥

ग्रहः क्रूरो व्ययाधीशो धर्मारिसहजे व्यये ।
दग्धे चक्री सुतस्थाने जातको म्रियते सुतः ॥ १७४ ॥

यावत्संख्या ग्रहाणां सुतभवनगता पूर्णदृष्टिर्यदा वा,
यावत्संख्या प्रसूतिर्भवति बलयुता पुंग्रहा पुत्रकथ्यम् ।

कन्या चन्द्रस्य शुक्रे हिमसुतरविजो गर्भहानिं करोति
केचिच्चन्द्राद्विचार्यं मुनिगणकथितं तद्विचिन्त्यं नवांशे ॥ १७५ ॥

नवांशलग्नात्सुतपस्तु सौम्यः शुभाऽशुभैर्युक्तविलोकितो वा ।
शुभैः सुताः स्युःप्रचुरा नरस्य क्रूरैर्न सन्तानसुखं तदा भवेत् ॥ १७६ ॥

नीचस्त्रीकं च नीचस्थे भावेशे तुङ्ग उच्चगः ।
कुर्याद्राजा नवांशे तु स्वनवांशे तदाधिपम् ॥ १७७ ॥

सेनानीर्मित्रनवांशे भोगगुणसंयुतश्च ।
शत्रुनवांशे दुःखितमल्पं तमलीनमसम् ॥ १७८ ॥

नीचांशेदास्यत्वं दशां प्राप्य फलं भवेत् ।
सर्वमेवं खगैश्चिन्त्यं फलं वाच्यं विचक्षणैः ॥ १७९ ॥

**अथ स्त्रीजन्मसमये विशेषः**

परस्परांशोपगतौ भवेतां महीजशुक्रौ जननेऽङ्गनायाः ।
स्वयं मृगाक्षीत्यभिसारिकेव प्रयाति कामाकुलितान्यगेहे ॥ १८० ॥

## अथ लग्नगत द्वादशांश फलम्

जातो मेषः द्वादशांशे खलात्मा चौरः पापाचारधर्मानुरक्तः ।
स्त्रीवित्ताढ्यो रोगवानुक्षभांशे युग्मांशे तु द्यूतकृत्यः सुशीलः ॥ १ ॥

दुष्टाचारः कर्कटांशे तपस्वी सिंहे भागे राजकृत्यः सुशूरः ।
द्यूताचारः स्त्रीरतः कन्यकांशे व्यापारी स्यात्तौलिभांशे धनाढ्यः ॥ २ ॥

कीटांशके वधरुचिर्विटचोरनाथश्चापांशके पितृमही सुरदेवभक्तः ।
सस्याधिपो मृगमुखांशभवः सुभृत्यः कुम्भे खलस्त्वनिमिषे धनिकश्च विद्वान् ॥३॥

## अथ सर्वेषां ग्रहाणां लग्नगतद्वादशांशफलमाह

मलिनश्चपलः क्रूरः स्वल्पायुरधनोऽलसः ।
कामी नरोऽल्पधर्मः स्याद् द्वादशांशे विवस्वतः ॥ ४ ॥

**अन्यच्च**

सूर्यांशको वासरपस्य लग्ने नरं प्रसूते बहुमानवश्यम् ।
लौल्यान्वितं धर्ममुखैर्विहीनं निस्त्रिंशमुग्रं चपलस्वभावम् ॥ ५ ॥

वन्धुनामाश्रयः प्राज्ञो धनाढ्यः प्रियदर्शनः।
शिल्पज्ञो बहुधर्मः स्याद् द्वादशांशे भवेन्नरः ॥ ६ ॥

**सूर्यांशको रात्रिपत्तेर्विलग्ने** करोति मर्त्यं बहुरत्नभाजम्।
नानार्थलाभैः सहितं सुशीलं कुलप्रधानं बहुमित्रयुक्तम् ॥ ७ ॥

पिशुनो मलिनो मूर्खः पापात्मा सुरतप्रियः।
अल्पधर्मो **महीजस्य** द्वादशांशे भवेन्नरः ॥ ८ ॥

**अन्यच्च**

सूर्यांशको **भूमिसुतस्य** लग्ने नरं प्रसूते रुधिरामयाढ्यम्।
पामादिरोगैर्व्यसनैः समेतं प्रचण्डयुक्तं रणकातरञ्च ॥ ९ ॥

सूर्यांशको **सोमसुतस्य** लग्ने नरं प्रसूते सुभगं सुशीलम्।
विद्यासु रक्तं गुरुदेवभक्तं परैरधृष्यं रसलालसञ्च ॥ १० ॥

**अन्यच्च**

सूर्यांशकश्चन्द्रसुतस्य लग्ने नरं सुवाते सुभगं मनुष्यम्।
विद्यासु रक्तं गुरुदेवभक्तं परैरधृष्यं रतिलालसञ्च ॥ ११ ॥

शुचिः शास्त्रार्थविद्वक्ता सुखी दीर्घायुरीश्वरः।
सुहृदामाश्रयीभूतो द्वादशांशे **बृहस्पतेः** ॥ १२ ॥

**अन्यच्च**

सूर्यांशको **देवगुरोर्विलग्ने** करोति मर्त्यं बहुशास्त्रयुक्तम्।
जनानुगं गीतयुतं विलग्नं प्रभूतमित्रं रणकोविदञ्च ॥ १३ ॥

शूरो बहुधनो भागी नृत्यगीतप्रियः सदा।
शुचिर्दाता क्षमी वक्ता द्वादशांशे **भृगोरभूत्** ॥ १४ ॥

**अन्यच्च**

सूर्यांशको **भार्गवनन्दनस्य** लग्ने प्रसूते सुभगं मनुष्यम्।
रूपान्वितं पार्थिवमानयुक्तं प्रियातिथिं मानधनैः समेतम् ॥ १५ ॥

पिशुनश्चपलो धूर्तः कामी परार्थलुब्धकः।
मलिनो हीनधर्मा स्याद् द्वादशांशे भवेन्नरः ॥ १६ ॥

सूर्यांशको **काश्यपनन्दनस्य** लग्ने प्रसूते रणरोगयुक्तम्।
नरं कुशीलं निजबन्धुहीनं शोकार्दितं दानयुतं सदैव ॥ १७ ॥

## अथ सर्वेषां ग्रहाणां द्वादशांशे सूर्यफलमाह

### तत्रादौ सूर्यस्य द्वादशांशे सूर्यफलम्

सूर्यांशके स्वे सविता प्रसूते नरं सुतीक्ष्णं परिभीतिचित्तम् ।
प्रभूतरोषं गत्तवीर्यमर्थं परं सुदक्षं, मतिऋद्धिहीनम् ॥ १८ ॥

### चन्द्रस्य द्वादशांशे सूर्यफलम्

सूर्यांशके रात्रिपतेर्विवस्वान् करोति सौम्यं शुभकर्मयुक्तम् ।
विद्याविनीतं सततं सुखाढ्यं प्रसन्नचित्तं विभवैः समेतम् ॥ १९ ॥

### भौमस्य द्वादशांशे सूर्यफलम्

प्रियैर्विमुक्तं वधबन्धयुक्तं पापानुरक्तं पुरुषं प्रसूते ।
सूर्यांशके भूतनयस्य भानुर्विहीनसत्यं परतर्ककञ्च ॥ २० ॥

### बुधस्य द्वादशांशे सूर्यफलम्

सत्याधिकं सर्वसुखैः समेतं प्रियातिथिं ब्राह्मणसम्मतञ्च ।
सूर्यांशके सोमसुतस्य भानुस्तिष्ठन् प्रसूते मनुजं सनाथम् ॥ २१ ॥

### गुरोर्द्वादशांशे सूर्यफलम्

स्त्रीवल्लभं गीतकलासु दक्षं भोगान्वितं वस्त्रविलेपनाढ्यम् ।
सूर्यांशके देवगुरो विवस्वान् करोति मर्त्यं विनयप्रधानम् ॥ २२ ॥

### शुक्रस्य द्वादशांशे सूर्यफलम्

सुशिल्पिनं धर्मरतं सुदान्तं प्रियातिथिं सर्वसहं सुशूरम् ।
सूर्यांशके दैत्यगुरोः प्रसूते भानुर्नरं पार्थिवमानयुक्तम् ॥ २३ ॥

### शनेर्द्वादशांशे सूर्यफलम्

क्लीबं कृशं पापरतं कृतघ्नं श्रिया विहीनं सततं कुचैलम् ।
करोति भानुर्बहुदुःखयुक्तं सूर्यांशकस्थस्तु शनैश्चरस्य ॥ २४ ॥

## अथ सर्वेषां ग्रहाणां द्वादशांशे चन्द्रफलमाह

### तत्रादौ सूर्यस्य द्वादशांशे चन्द्रफलम्

सूर्यांशकेऽर्कस्य निशाधिनाथो भयाधिकं दुःखयुतं मनुष्यम् ।
प्रमादिनं मित्रजनैर्विहीनं, सुदीर्घसूत्रं सततं कृतघ्नम् ॥ २५ ॥

### चन्द्रस्य द्वादशांशे चन्द्रफलम्

सूर्यांशके स्वे प्रकरोति चन्द्रो धनान्वितं वाग्मिनमल्पशत्रुम् ।
नरं नितान्तं शुभपुत्रयुक्तं सुवाहनाढ्यं परपक्षहीनम् ॥ २६ ॥

### भौमस्य द्वादशांशे चन्द्रफलम्

सूर्यांशके भूमिसुतस्य चन्द्रः करोति नित्यं बहुसौख्ययुक्तम् ।
विचक्षणं भोगयुतं सुवेषं, स्वधर्मरक्तं सततं सुशीलम् ॥ २७ ॥

### बुधस्य द्वादशांशे चन्द्रफलम्

सूर्यांशके सोमसुतस्य सोमः सौम्यं प्रसूते सुखिनं मनुष्यम् ।
शिल्पज्ञमत्यद्भुतकर्मयुक्तं प्रियातिथिं विश्रुतमेव नित्यम् ॥ २८ ॥

### गुरोर्द्वादशांशे चन्द्रफलम्

सूर्यांशके देवपुरोहितस्य नरं सुवेषं प्रकरोति चन्द्रः ।
नृपप्रसादं विनयैः समेतं सुचित्रयानं बहुमित्रयुक्तम् ॥ २९ ॥

### शुक्रस्य द्वादशांशे चन्द्रफलम्

सूर्यांशके भार्गवनन्दनस्य नरं विनीतं प्रकरोति चन्द्रः ।
नृपप्रसादैः प्रचुरं समृद्धं हस्त्यश्वयुक्तं प्रचुरान्नपानम् ॥ ३० ॥

### शनेर्द्वादशांशे चन्द्रफलम्

शनैश्चरस्यार्कविभागसंस्थो विधुर्विधत्ते चलसत्ययुक्तम् ।
कीनाशमालस्यतमं नितान्तं स्वबन्धुवर्गैः परिवर्जितञ्च ॥ ३१ ॥

## अथ सर्वेषां ग्रहाणां द्वादशांशे भौमफलमाह

### तत्रादौ सूर्यस्य द्वादशांशे भौमफलम्

रतिप्रियं कूटरतं कुशिल्पं चरं स्थिरं वा व्रणबन्धनञ्च ।
सूर्यांशके वासरपस्य भौमो नरं प्रसूते विटधूर्तचेष्टम् ॥ ३२ ॥

### चन्द्रस्य द्वादशांशे भौमफलम्

सूर्यांशके रात्रिचरस्य भौमो नरं प्रसूते सुवपुः सुकान्तम् ।
उदारशीलं बहुसौख्यभाजं प्राज्ञं बहुभ्रातरमर्जितञ्च ॥ ३३ ॥

